तानुसारं तपआदीनां ब्रह्मविद्याप्राप्तावङ्गाङ्गिभावः कल्प्यते सहपाठोऽकिंचित्कर इति शंकते—सहपठितानामपीति। एवं विभागपूर्वकं विनियोगः कर्तव्यस्तथा चार्थसंबन्ध उपपद्येत। स च विभाग इत्थम्। तपःप्रभृतीनां विद्यांगत्वेन विनियोगः। वेदानां तदंगानां चार्थप्रकाशद्वारा कर्मात्मज्ञानोपायत्वम्। एवं सहकथनेऽपि पृथग्विनियोगे श्रौतं दृष्टान्तमाह—**यथा सूक्तवाकानुमन्त्रणमन्त्राणामिति**। "अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यादिनैव सूक्तवाकेन सर्वयागसमाप्तौ देवतानुमंत्रणं क्रियते। यद्यप्यस्मिन्सूक्तवाके बह्व्यो देवताः पठ्यन्ते तथापि यस्मिन्यागे या देवताहूता तस्या एव विसर्जने योग्यतावशात्तस्य सूक्तवाकस्य विनियोगः। सूक्तवाकानुमंत्रणमंत्राणामित्यत्र सूक्तवाकेनानुमंत्रणमिति तृतीयासमासः। **नायुक्तेरिति**। युक्तिर्घटनां तस्या असंभवात्। प्राञ्चति—गच्छति। अन्चु गतिपूजनयोरिति धातोः प्रोपसृष्टस्य रूपम्। सूक्तवाकानुमंत्रणमन्त्रेषु योग्यतायाः सत्त्वात्तथा व्यवस्थायामप्यत्र कर्मणां विद्याविरुद्धत्वेन योग्यताभावात्तथा व्यवस्थाया असंभवादित्यर्थः। तमेव योग्यताभावं स्पष्टयति—**नहीति**। **निःश्रेयसस्येति**। एवं च ब्रह्मविद्यायास्तत्फलस्य कर्मवैलक्षण्यमित्यर्थः। **प्रश्नप्रतिवचनस्येति**। उपनिषदमब्रूमेति गुरूक्तप्रश्नोत्तरवाक्यस्य ॥४॥७॥

(वाक्यभाष्यम्) [पृ. ४१] ब्राह्मीत्यस्य व्याख्यानं—**ब्राह्मणजातेरिति**। ब्राह्मणजात्यनुष्ठेयां विद्यामात्मसाधनभूताम्। [पृ. ४२] अब्रूमेत्यस्य भविष्यकालिकमर्थमङ्गीकुरुते व्यवस्थापयति च—**ब्राह्मी नोक्तेत्यादिना**। **भूताभिप्राय इति**। भूतकालसंबंधिक्रियाविशिष्टोऽत्राब्रूमेति शब्दो न किन्तु भविष्यकालसंबंधिक्रियाविशिष्टः ॥४॥७॥

(प्रकाशिका) [पृ. ४२] श्रुतिस्योत्तरालोचने पक्षत्रयं संभवति तदाह—**किमुपनिषत्प्रतिपाद्यमिति** ॥४॥७॥

चतुर्थखण्डेऽष्टममन्त्रः ॥४॥८॥

(पदभाष्यम्) [पृ. ४३] **अमृदितकल्मषस्येति**। अविनष्टपातकस्य। **यथेन्द्रेत्यादि**। चतुर्थपर्यायपर्यन्तमिन्द्रस्य प्रजापतिबोधितब्रह्मविषयिणी प्रतिपत्तिर्ज्ञानं नासीत्तस्यैव प्रजापतेर्वाक्याद्विरोचनस्य तु प्रथम एव पर्याये विपरीता देहात्मप्रतिपत्तिरभवदियं कथा छान्दोग्येऽष्टमाध्यायेऽष्टमखण्डेऽस्ति।

यथाश्रुतमिति । श्रुत्यनुसारि । अमानित्वमिति " अमानित्वमदंभित्व-महिंसा क्षान्तिरार्जवम् " भ. गी. १३।७ इत्यादिभगवद्गीतोक्तम् । पडिति । शिक्षा-पाणिन्यादिकृता । कल्पः—श्रौतस्मार्तसूत्रमाश्वलायनादिमुनिकृतम् । व्याकरणं-पाणिनिप्रभृतिनिर्मितम् । निरुक्तं—यास्ककृतम् । छन्दः-पिंगलकृतम् । ज्योतिषं—लगधकृतम् । सर्वांगाणीत्यनेन शिरआद्यवयवग्रहणे शिक्षादीनां ग्रहणं कथमत आह—अस्मिन्पक्ष इति । वेदपदेन शिक्षादिग्रहणे युक्ति-माह—अंगिनीति ॥ ४ ॥ ८ ॥

( वाक्यभाष्यम् ) [ पृ. ४२ ] ब्रह्माश्रयेति । ब्रह्म वेद आश्रयो ब्रह्मविद्यायाः । वेदमूलत्वात्तस्याः॥ ४ ॥ ८ ॥

( प्रकाशिका ) [ पृ. ४४ ] तप आलोचने इत्यस्य रूपं तप इति मत्वाह—शास्त्रपर्यालोचनं वेति । तदनुकूलग्रन्थाश्चेति । ऐतरेयशतपथा-दिब्राह्मणानि । " वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् " या. स्मृ. अ. २।८३ इति याज्ञवल्क्यस्मृतेराह—अपीडाकरमिति ॥ ४ ॥ ८ ॥

चतुर्थखण्डे नवममन्त्रः ॥ ४ ॥ ९ ॥

(पदभाष्यम्) [ पृ. ४४ ] औपचारिक इति । इतरलोकापेक्षया स्व-र्गस्य बहुकालस्थायित्वेन लाक्षणिकोऽनन्तशब्दः स्यादिति शङ्कार्थः ॥४॥९॥

( वाक्यभाष्यम् ) [ पृ. ४४ ] सुखप्राय इत्यनेन सुखबाहुल्यादल्पदुः-खात्मकत्वं तस्य लोकस्य भवेत्किंच सुखवैशिष्ट्येन सगुणत्वमपि तस्य स्यादत आह—निर्दुःखात्मनीति । सुखप्राय इत्यस्य दुःखाभावे तात्पर्य-मिति भावः ॥ ४ ॥ ९ ॥

( प्रकाशिका ) [ पृ. ४६ ] त्रिविधपरिच्छेदरहित इति । देशतः कालतो वस्तुत इति त्रिविधः परिच्छेदस्तद्रहिते । उक्तसर्वावधारणार्थेति । ग्रन्थसमाप्तिद्योतिकेति तात्पर्यम् ॥ ४ ॥ ९ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीकेनोपनिषव्द्याख्यात्रयबालबोधिनी पाठकोपाव्हश्रीधरशास्त्रिकृता समाप्तिमयासीत् ॥

# उपनिषद्व्याख्यात्रयगतानां वचसां सूचिः

## केनोपनिषत्पदभाष्ये लब्धस्थलानि वचांसि

## केनोपनिषत्पदभाष्येऽलब्धस्थलानि वचांसि.